ओ३म्

# वैदेशिकाः गीर्वाण्युपासकाः

डा० कान्तिकिशोर भरतिया

एम० ए०, पी-एच० डी०

शिक्षक प्रकाशन

प्रेमनगर, कानपुर - १

॥ ओ३म् ॥

# [illegible]शिकाः गीर्वाण्युपासकाः

★

डा० कान्तिकिशोर भरतिया

एम० ए०, पी-एच० डी०

प्राध्यापकः, (संस्कृत - विभाग)

डी० ए० वी० महाविद्यालय, कर्णपुरम्

★

शिक्षक प्रकाशन

१०५/१९४, प्रेमनगर, कानपुर - १ (भारत)

# निवेदनम्

संस्कृताऽनुरागिणां गीर्वाण्युपासकानां बन्धूनां सेवासु पुस्तिकामिमां समर्प्य मोदते नश्चेतः । पूर्वकालादेवाऽस्याः गीर्वाण्याः साहित्येन समाकृष्टाः आसन् सकलविश्वजनीनाः विद्वांसः । तत्र ये पाश्चात्यमनीषिणो देवभूमिमिमाम् (आर्यावर्तदेशम्) आगत्यागत्य सस्कृतभाषामेतत्साहित्यञ्चाऽधीतवन्तः, तान् संलक्ष्य प्रस्तुतोऽयं ग्रन्थः ।

तान् प्रति यथोचितं सम्मानं प्रकटयद्‌भिरप्यस्माभिः 'विदेशिनः विशेषतयाऽऽङ्गलदेशवासिनः केनाऽभिप्रायेण संस्कृताऽध्ययनं प्रति समाकृष्टाः प्रयत्नवन्तश्च जाताः" इति विषये मुग्धानल (मेकडानल) महोदयस्य कतिपये शब्दाः अत्र उद्‌ध्रियन्ते, ये च १८९९ ई० वर्षे तेन सस्कृतसाहित्यस्येतिहासग्रन्थस्य भूमिकायां समाविष्टाः—

'It is undoubtedly a surprising fact that down to the present time no history of Sanskrit literature as a whole has been written in English. For not only does that literature possess much iutrinsic merit, but the light it sheds on the life and thought of the population of our Indian Empire ought to have a peculiar interest for the British nation, Owing chiefly to the lack of an adequate account of the subject, few, even of the young men who leave these shores every year to be its future rulers, possess auy connected information



about the literature in which the civilisation of Modern India

can be traced to its sources, and without which that civilisation cannot be fully understood. It was, therefore, with the greatest pleasure that I accepted Mr, Gosse's invitation to contribute a valume to this saries of Literatures of the World, for this appeared to me to he a peculiarly good opportunity for diffusing information on a subject in which more than twenty years of continuous study and teaching had instillod into me an evcr-deepening interest.'

शब्दानिमानधीत्य कस्य देशप्रियस्य चेतो न दह्यते। मनीषिणो विद्वांसः स्वयमेवाऽवगच्छन्तु–"मुग्धानलस्याऽभिप्रायं प्रयोजनञ्च—नेच्छामो वयमत्र किमपि वक्तुम्।

अस्य ग्रन्थस्य प्रकाशनार्थं सन्ति धन्यवादार्हाः शिक्षकप्रकाशन-संचालकाः डा० प्रकाशमित्रशास्त्रिप्रभृतयो विद्वांसः, येषां सत्प्रयत्नेन प्रकाशितोऽयं ग्रन्थः। धन्यवादार्हा च मदन्तेवासिनी श्रीमती उमा अवस्थी, या विशेषाभिरूचिं प्रदर्शितवती ग्रन्थस्याऽस्य प्रकाशने।

अस्य ग्रन्थस्य निर्माणे येषां विदुषाम् चिरस्मरणीयं साहाय्यं सम्प्राप्तमभूत्, तेषु ममाऽन्तेवासी सहप्रवक्ता च श्रीशिवबालको द्विवेदी ओमशंकरमिश्रश्च विशेषतो धन्यवादाऽर्हौ। एताभ्यामपि सन्त्वस्माकम् सधन्यवादा आशिषः मङ्गलकामनाश्च।

आशास्महे गीर्वाण्युपासकानां कृते भवेत् उपयोगी लाभप्रदश्चाऽयं मे प्रयत्नः।

कालिदासजयन्ती — कान्तिकिशोर भरतिया

३१ अक्टूबर १९७९ ई० — डी. ए. वी. महाविद्यालय, कर्णपुरम्

ओ३म्

## ।। संस्कृताख्याननीतिकथानां विदेशगमनम् ।।

संस्कृतभाषासाहित्यं सकलेऽस्मिन् संसारेऽस्माकं देशस्याऽपूर्वो निधिः वर्त्तते । स्वचरित्रं शोधयितुं प्राचीनार्षमर्यादां स्वीकृत्य स्वजीवनं सफलयितुं च तदद्यापि सर्वान् विद्वज्जनान् प्रेरयति । नानाविधा-नामिव स्वल्पायुषां बालानाम् कृते मनोवैज्ञानिकशिक्षणस्य विधेः प्रादुर्भावोऽप्यस्माकं देवैरपि प्रार्थिते दुर्लभे देशे भारतेवर्षे एव जातम् । गुरुमुखात् शिक्षाऽवाप्तये कस्यचित्साक्षादादेशापेक्षया यदा बालकाः कामपि कथां श्रृण्वन्ति तदा तस्योदाहरणेन स्वयमेव तत्तात्पर्यं गृह्णन्ति । "सत्यम् वदेति" श्रुत्वा वक्तारमात्मनः श्रेष्ठं मन्यमानाः जनाः तस्य कथनमुपेक्षयितुमप्यर्हन्ति, किन्तु यदा मिथ्याभाषणस्य दुष्प्रभावं श्रृण्वन्ति तदा तेषाम् सत्यं प्रति ध्रुवा निष्ठा जायते । अनेनैव विधिना धर्मार्थकाममोक्षाणामाध्यात्मिकविद्याविषयकानि दैनिकव्यवहारोपयोगीति सदाचारराजनीतिव्यावहारिकज्ञानानि अपि वर्णितानि संस्कृतनीतिकथासाहित्येषु ।

पशुपक्षिणां मानवीकरणमासां कथानां प्रमुखा विशेषता । पशु-पक्षिणः मनुष्यवत् वदन्ति, परस्परं व्यवहरन्ति, सन्धिं विग्रहं वाऽपि कुर्वन्ति । सूक्तयः लोकोक्तयः कथासु पूर्णाः सन्ति । मुख्यकथान्तर्गताः नानागौणकथाःविद्यन्ते याः मुख्यपात्रैः स्ववक्तव्यानां प्रमाणीकरणार्थं प्रस्तूतन्ते । छान्दोग्योपनिषद्युद्गीथश्वानस्याऽख्यानं' विद्यते ।

पुराणेष्वपि नानाऽऽख्याननीतिकथाः समाविष्टाः। एतादृशीनां कथानां सम्यग्विस्तृतरूपं बौद्धजातकेष्वपि दृश्यते । महात्मनो गौतम-बुद्धस्योपदेशेषु समाविष्टानां कथानां संग्रह एष वर्त्तते । चीनदेशीयः विश्वकोषः अपि वर्त्तते । तस्याऽवलोकनेन सिध्ययति यत् गौतम-बुद्धस्य प्रादुर्भावात् किंचित्कालानन्तरमेवैताः कथाः चीनदेशस्य भाषायामनूदिताः । एताः बौद्धजातककथाः नूनमेव सकलसंसारस्य आख्याननीतिकथासाहित्येषु प्राचीनतमाः विद्यन्ते । एताः कथाः कथं प्रादुर्भूताः ? कीदृशीश्च परिस्थितीः प्राप्य ताः स्वरूपं परिवर्त्य वर्तमानपाश्चात्यवैदेशिकसाहित्यमङ्गीकृतवन्त्यः' इत्यपि-मनोरमविषयः ।

खीष्टषष्ठशताब्द्यां पंचतन्त्रनामकः संस्कृताख्याननीतिकथानां संग्रह आसीत् । विद्वांसः एतस्योद्गमविषयेऽद्यावधि किञ्चिदपि निश्चितं मतं प्रकटयितुमसमर्थाः । पञ्चतन्त्रबौद्धजातकेषु काचित् समता विद्यते । बौद्धजातकानां मूलादेव पञ्चतन्त्रकमुद्भूतम्' इति मन्यन्ते केचन विद्वांसः ।

बौद्धजातकाः विश्वसाहित्यस्य प्राचीनकथाग्रन्थाः सन्ति । पंच-तन्त्रस्य शैल्यनुसारं पश्चात् केचनान्येऽपि कथाग्रन्थाः सञ्चिताः दृष्टिपथमायाताः । अस्य विख्यातसंग्रहस्य ससानियादेशस्य राज्ञः खुशरो अनुशीरवाँमहोदयस्योपरि विशिष्टः प्रभावः आसीत् । वार्जोईनाम्ना प्रसिद्धेनैकेन पारसीकविदुषाऽऽख्यानकसमूहमिदं पेह-लवीभाषायां कालिदाहदमनाहनामके ग्रन्थरूपेऽनूदितम् । अनुवाद-स्य मूललिपिः सम्प्रति नोपलभ्यते । १५७० ईस्वीये वर्षे सीरिया-भाषायां संस्थितेनैकेनाऽनुवादेन तस्य मूलं प्रतीयते । पंचतन्त्रस्य

करटकदमनकश्रृगालयोरेव नामान्तरं कालिदाहृदमनाह इति विद्यते। १८७० ई० वर्षे अस्यैका पाण्डुलिपिः उपलब्धाः।

खलीफा अलमसूरमहोदयस्य राज्यसभायाम् इस्लाममताऽनुयायी कश्चिद् विद्वान् इमाः कथाः अरबीभाषायामनूदितवान्। अस्याऽरबीसंस्करणस्य १००० ई० समये पुनः सीरियनभाषायाम् ११३० ई० वर्षे पारसीकभाषायाम्, ११८० ई० वर्षे यूनानीभाषायाम्, १२४० ई० वर्षे हिब्रूभाषायां रूपान्तरं जातम्। १४९४ई० वर्षे अनुवारे सहेलीनामके पुस्तके नवीनसंस्करणं कृतम्। षोडशशताब्द्याम् अस्य हिब्रूसंस्करणस्य त्रयोदश संस्करणानि प्रकाशितानि। यदेतेषां पुस्तकानां लोकप्रियतायाः प्रत्यक्षं प्रमाणमस्ति। कालान्तरे इमाः कथाः शर्मणभाषायामपि समाविष्टाः। १५७०ई० वर्षे सरटामसनार्थमहोदयेनाऽऽङ्ग्लभाषायामस्यानुवादः कृतः।

षष्ठशताब्द्याम् इदं समग्रमपि साहित्यं मूलरूपेण भारतवर्षे एवासीत् यदाप्रभृति स्वजन्मभूमिं प्रविहायाऽऽङ्ग्लदेशं प्राप्य च एताभिराङ्ग्लभाषायाः शोभावृद्धिः समारब्धा तदाप्रभृति अद्य सहस्रवर्षाणामवधिः व्यतीता। अवधावस्मिन् महत्परिवर्तनं जातम्। मूलसंस्कृताऽऽख्यानानि प्रत्येषां कियती स्थितिः आसीदित्यपि विचारणीयम्। १७८८ ई० वर्षे अस्य फ्राँसदेशीयानुवादस्य पुनः मुद्रणमभूत्। लाफान्टेनीमहोदयेनैतस्य भूमिका लिखिता। भूमिकायां सुस्पष्टो निर्देशः विद्यते यद् एतेषां कथानकानां मूलं प्राचीनभारतीयाऽऽख्यानसाहित्यमेव विद्यते।

एतासु कथासु काश्चित् अतीव सुरुचिपूर्णाः जाताः। तासु अनेकाः कथाः सर्वेषु संस्करणेषु अनुवादेषु वा मूलरूपेण एव विद्यन्ते।

यथा—वनिता एका शिरसि दुग्धपूर्णं पात्रं धारयन्ती तं विक्रेतुमापणं प्रति गच्छति। लभ्यमूल्यं विचार्य सा हर्षातिरेकेणोल्प्लावनं करोति दुग्धं सर्वं च भूमौ पातयति। अन्यकथायामेकः भिक्षुकः पात्रे सम्मुखमुपस्थितं भिक्षान्नं पश्यति। दुर्भिक्षसमये तान् दुर्लभशस्यकणान् विक्रीय काञ्चित् लावण्यवतीं कन्यां परिणेतुं कल्पयति। प्रसन्नतया सः पादप्रहारं करोति, पात्रं त्रोटयति, शस्यकणान् पातयति च। अनेन विधिना तस्य सर्वाः आशाः निष्फलीभवन्ति। लाफाँटेनीमहोदयस्य फ्रेञ्चकथासु संस्कृतस्य बहूनि समानकथानकानि समुपलभ्यन्ते, येनाऽस्माकं देशस्य साहित्यं मूलमेव प्रतिभाति। कश्चिच्छृगालः कानने शूकरव्याधयोः शवं प्राप्नोति। यदा सः प्रत्यञ्चासूत्रं भक्षयितुमिच्छति कोणे शिरसि स्पृष्टे सति तत्क्षणमेव प्राणान् त्यजति। एतादृशाः नानाकथाः लोकोत्तरविदेशीयसाहित्ये वर्त्तन्ते येषां मूलस्रोतमस्माकमेव देवदेशो भारतवर्षः विद्यते इति।

अस्माकं भारतीयसंस्कृतनीतिकथाऽऽख्यानसाहित्यस्य विदेशगमनेतिहासे बलरामजोजेफटनाम्नः क्रिस्ताख्यानस्य विशिष्टं महत्वं विद्यते। मध्यकालीनयोरोपदेशीयेतिहासे पुस्तकस्याऽस्य च विशिष्टं स्थानं वर्तते। बौद्धमतस्य जातककथाः किञ्चिद् भिन्नं रूपं विधाय योरोपीयसाहित्ये प्रविष्टाः। ग्रन्थोऽयं खलीफा-अलमंसूरमहोदयस्य (६५३—७७४ ई०) राज्यसभायां जान् आफ डेमस्कसनामा विद्वान् कालिदाहदमनाहनामकं ग्रन्थमनुसृत्याऽलिखत्—यस्य मूलभस्मद्देशीय एव विद्यते। यूनानदेशीयभाषायाः अस्याऽऽख्यानग्रन्थस्य बहूनि संस्कराणि बहवोऽनुवादाश्चाऽभवन्। अस्याः कथायाः नायकः राजकुमारजोजेफटनामा महात्मनो गौतम-

बुद्धादभिन्न एव प्रतिभाति। भाषाविज्ञानस्य भाषापरिवर्त्तन-नियमानां चाऽवलोकनेन सिध्यति यज् जोजेफटशब्दः बुद्धाऽपरनाम-बोधिसत्वशब्दस्याऽपभ्रंशरूपमेव विद्यते

नूनमेव यूनानोऽपि संसारस्य प्राचीनो देशः। तस्याऽऽख्यानसाहित्यम् ईशपकथारूपेण अद्यावधि सुरक्षितं वर्तते। उभयोरनयोः भारतयूनानदेशयोः साहित्यस्य संतुलनेऽस्माकं देशस्य साहित्यं सुविकसितं प्रभावोत्पादकं च विद्यते। संस्कृताऽऽख्याने सिंहशृगालयोः यूनानाऽऽख्याने सिंहोल्कामुख्योः कथानकमुदाहरणरूपेण प्रस्तुतम्। भारतवर्षीया कथा तदपेक्षया सुरुचिपूर्णा मनोविज्ञानसम्मता महत्व-पूर्णा च विद्यते।

अस्मद्देशीयाऽऽख्यानसाहित्ये पञ्चतन्त्रबौद्धजातकाऽनन्तरं वेताल-पञ्चविंशत्या अपि विदेशेषु समुचितं महत्वं विद्यते। प्रायः १२०० ई० वर्षे शिवदासमहोदयेन वेतालस्य पंचविंशतिकथाः स्वकीये ग्रन्थे संगृहीताः। उज्जयिन्याः अधीश्वरं विक्रमादित्यम् एको बेतालविशेषः प्रहेलिकारूपाः पञ्चविंशतिकथाः श्रावयति। त्रयः रक्षकाः प्रेमिणः सन्धाय एव राजकन्यकामेकां राक्षसदमनात् रक्षितवन्तः। तेषु केनचित् सा प्रणेतव्या। एतादृशाः बहवः प्रश्नाः, अनेकाः समस्याश्च तत्र समाविष्टाः। हिन्दीभाषायामस्य ग्रन्थस्य 'वेतालपचीसी' नाम्ना अनुवादः जातः। मंगोलियादेशस्य भाषायां सिकद्दूरनामकं पुस्तकमुपलभ्यते यस्मिन् वेतालपञ्चविंशत्याः बह्व्यःकथाः अनूदिताः सन्ति।

महाराजभोजस्य राज्यकाले (१०१८--१०६३ ई०) विर-चिता "द्वात्रिंशत्पुत्तलिका" इति नाम्ना एका कथा प्राप्यते। तत्र

विक्रमादित्यस्य सिंहासनात् उत्थाय द्वात्रिंशत्पुत्तलिकासु एकैका पुत्तलिका एकामेकां कथां श्रावयित्वा गगनतलमुत्पतति । एतद्देशस्य प्रसिद्धाऽकब्बरमहतः सम्राजः आज्ञानुगुणं १५७४ ई० वर्षे पारसी-भाषायामनूदितोऽयं ग्रन्थः । कालान्तरे तन्मतेनैव स्याममंगोलियादेशी-यभाषास्वपि परिवर्त्तितैषा कथा ।

चतुर्दशशताब्द्यां शुकसप्ततिकथाऽप्येका निर्मिता । तस्याः कर्त्तुः विषये निर्भ्रान्तिज्ञानं नास्ति । मदनसेननामा व्यक्तिविशेषः सप्तति-दिवसाय प्रवासार्थं देशान्तरं गच्छति । प्रोषितभर्तृका तस्य प्रिया साहाय्यार्थं शुकमेव गच्छति । शुकः विनोदार्थं वियोगक्लेशक्लेशितां तां प्रतिरात्रि एकामेकां मनोरमां कथां श्रावयति । किञ्चित्काला-नन्तरं तूतीनामा नाम्नैषा कथा पारसीकभाषायामनूदिता । तस्य प्रभावाद् योरोप-एशियाक्षेत्रेऽनेकासु भाषासु कथैषा परिवर्तिता । समुद्रयात्रिणः सिन्दवादस्य कथायामस्य प्रभावः स्पष्ट एव प्रतिभाति । अरबदेशस्य मुरादीमहोदयस्य मतं विद्यते यत् पञ्चतन्त्रस्य प्रणा-ल्याः सिन्दवादस्य कथायां सुस्पष्ट एव प्रभावो विद्यते ।

त्रयोदशशताब्द्याम् इटलीदेशस्य "बोकेशियो" नामा कथाकारः 'डिकेमेरान' उपाधावन्तर्गते प्रेमचातुरीविदग्धाभिसारमधुरहास्यपूर्णाः बह्व्यः कथाः विरचितवान् । वस्तुदृष्ट्या पञ्चतन्त्र-हितोपदेश-दशकुमारचरित-सिंहासनद्वात्रिंशिकाग्रन्थेषु यदाधिक्येन साम्यं दृश्यते तत्संयोगमात्रमेव विद्यते इतिमतं सर्वथाऽनुचितमेव वर्तते । अतः नून-मेव बृहत्कथा तेषां मूलप्रेरणास्रोतः विद्यते । बोकेशियोमहोदयस्य रचनैतावती लोकप्रिया जाता यत् क्रिस्टमतप्रतिबन्धानन्तरमपि सकलयोरोपीयभाषासु तस्याः महत्वमद्यावधि वर्त्तते ।

## "चतुरंगक्रीडा"

सततकार्यव्यस्तः मनुष्यः यदा परिश्रमखिन्नो भवति तदानीं लघुकथाश्रवणेन तस्य मनोरञ्जनं तापाऽपनयनं च भवति। एतदर्थं नानाक्रीडासाधनानि अपि समाहितानि तेषु चतुरंगक्रीडाऽपि महत्वं प्रकटयति। अस्मिन् क्रीडनके उभयपक्षीया सेना परस्परं युद्धं करोति। सेनायाः पदाति-रथसेना-वाजिसेनागजसेनाः इति चत्वारि अंगानि सन्ति। येषां नियन्त्रणं मन्त्रिणां साहाय्येन राजा करोति। प्राचीनकालादेवाऽनेन क्रीडनकेन सर्वे एवऽऽबालवृद्धा एतद्देशीयाः नराः स्वमानसं रञ्जयन्ति स्म। षष्ठशताब्द्यां सुबन्धुबाणभट्टयोः रचनासु एतस्योल्लेखः विद्यते। वर्षत्तौं शस्यकेदारिकासूत्पततां मण्डूकानां सुषमां निरूपयन् सुबन्धुः घनविद्युतोः नयद्यूत-चतुरंगक्रीडनं वा मन्यते। "पीतहरितैः कृष्णकेदारिकाकोष्ठिकासु समुत्पतद्भिः दर्दुरशिशुकैर्जातुषैर्नयद्यूतैरिव चिक्रीड विद्युता समं घनकालः। (सूबन्धुकृतवासवदत्तायाः वर्षावर्णनम्।) अत्र नयद्यूते चतुररंगस्यैव तात्पर्यम्।

बाणभट्टोऽपि स्वकादम्बर्याः कथामुखारम्भे शूद्रके राजनि परिपालयति महीम् "सार्यक्षेषु शून्यगृहाः" इति निरूप्याऽस्य स्पष्टोल्लेखं कृतवान्। काव्यालंकारग्रन्थे रुद्रटोऽपि प्रहेलिकामयसंकुलं वर्णयति चतुरंगे इव रथपदातिहस्तिनः इतस्ततः संचरन्ति। षष्ठ-शताब्द्यां पारसीकदेशं प्राप्य शनैः शनैः अरबदेशेषु विख्यातिं गतः। तद्देशानतिक्रम्य-एकादशशताब्द्यां योरोपदेशेषु जनानामपि परिश्रान्तक्लिन्नानि मनांसि रञ्जयति स्म।

अस्मिन् प्रयुक्तः राजार्थं शाहशब्दः मध्ययुगीनयोरोपीयकाव्येषु

वहु विख्यातः। तत्र राजकुलानाम् उच्चकुलीनानां च मध्ये सुरूचिप्रियः जातः। आख्यानगल्पकथानां च विदेशगमनेन यथाऽस्माकं देशः प्रसिद्धः जातः तद्वत् चतुरंगोऽपि भारतीयगणितमस्तिष्कविकासप्रकटने महत् साहाय्यं व्यदधत्। संस्कृताख्यानगल्पकथासाहित्यस्य चतुरंगक्रीडायाश्च विदेशेषु प्रचारेणाऽस्माकं देशस्य संस्कृतेः सकलभूमण्डलपरिभ्रमण-स्योपरि नूनमेव प्रभावोऽभूदेव। यद्यपि प्राचीनकालादेव संसारस्य नानादिग्देशेभ्यः आगत्याऽऽगत्याऽन्तेवासिनोऽत्र विद्यां गृहीतवन्तः यस्य च षोडशशताब्द्याः पूर्वस्य सुनिश्चितः प्रामाणिक इतिहासः नोपलभ्यते तथापि "तक्षशिलानालन्दादिविश्वविद्यालयेषु वैदेशिकाः विद्यार्थिनः शिक्षामगृह्णन्, सर्वशास्त्राणां ज्ञानञ्चाध्यगच्छन्" इति सर्वमतसम्मतं सुप्रसिद्धमेव।

पंचदशशताब्द्यां वहवः योरोपखण्डीयाः वणिजः अपि व्यापारार्थं नानामार्गेभ्यः समागच्छन्। षोडशसप्तदश-शताब्दिमध्ये पुर्त्तगालीयाः डचाः फ्रेञ्चांगलदेशीयाः वणिजोऽप्ये-तद्देशमागच्छन्। देववाणी तान् कीदृग् अनुभवितुम् प्रैरयत् इति विचारणमावश्यकम्। सप्तदशशताब्द्याः मध्यवर्त्तिकाले एव हालैण्डदेशात् अब्राहमरोगर (Abraham Roger) नामा डच-विद्वान् भारतदेशमाजगाम। अत्र देशे एव च संस्कृतं सम्यगधीत्य स महाकविभर्तृहरेः नीतिवैराग्यश्रृंगारेति नाम्ना प्रथितानि त्रीण्यपि शतकानि डचभाषायामनूदितवान्। मध्ययुगीनयोरोपदेशेन सह सम्पर्कानन्तरम् शाहजहाँ तत्कालीनः भारत सम्राडासीत्। अस्याः रचनायाः षड्वर्षाऽनन्तरमेव यवनकुलकलङ्कोऽवरंगजीवः (औरंगजेब) दिल्लीसिंहासनमध्यतिष्ठत्। महाकविभर्तृहरेः

ग्रन्थानामियमुत्कृष्टता यद् यवनराज्यस्य प्राबल्यकालेऽपि ते डचभाषायामनूदिताः ।

एतदनन्तरं १२५ वर्षं यावद् कालमतिक्रम्य वारेनहिस्टिंग्स-(Warren Histings) महोदयः बंगदेशीयगवर्नरजनरलपदमधिष्ठितवान् । तदानीं स भारतदेशम् एतस्य प्राचीनपरम्परयैव शासितुमिच्छन् विदुषः ब्राह्मणान् विधिसाहित्यनिर्माणार्थं न्ययोजयत् । हिस्टिंग्स-महोदयस्य निमंत्रणमधिगत्य चार्ल्स विल्किंस (Charles wilkins) महोदयश्च सुरधुनीतटवर्त्तिनीं काशीं नगरीं समागत्य संस्कृतज्ञानं सम्यगुपार्जयत् । अथ च १७८५ ई० वर्षे श्रीमद्भगवद्गीताम्, १७८७ ई० वर्षे च हितोपदेशम् आङ्गलभाषायामनूदितवान् ।

सर विलियमजोन्स (Sir William Jones) महोदयः (१७४६-९४ ई०) पाश्चात्यसंस्कृतशिक्षायाः उत्कृष्टः प्रचारकः अभवत् । एकादशवर्षपर्यन्तं भारतवर्षे निवासं विधाय सः संस्कृतप्राच्यभाषायाः शिक्षाप्रेरणां चाऽलभत । देववाण्याः प्रचारार्थं च सः १७८४ ई० वर्षे 'रोयल एशियाटिक सोसायटी आफ बंगाल" नाम्नीं संस्थां संस्थापितवान् एतस्मिन्नेव देशे विधिवदधीत्य स १७८९ ई० वर्षे कविकुलशिरोमणेः महाकविकालिदासस्य सर्वोत्कृष्टम् 'अभिज्ञानशाकुन्तलनामकं" नाटकम् आङ्गलभाषायामनूदितवान् । कालिदासस्याऽमरकृतेः "अभिज्ञानशाकुन्तलस्य" आङ्गलभाषायामनुवादाज्जातः योरोपदेशीयैः सह परिचयः शिक्षाजगत्यनन्यां क्रान्तिमुदपादयत् ।

सरविलियमजोन्समहोदयेनाऽनूदितस्याऽभिज्ञानशाकुन्तलस्य शार्मणदेशीयविविधसाहित्येषु विशिष्टः प्रभावोऽभूत् । तद्देशीय एव गेटेनामा कविः कालिदासस्याऽमरकृतिमधीत्य स्वोद्गारमेवं प्रकटितवान् आङ्गलभाषायां शार्मण्यमूलस्य तस्याऽनुवाद इत्थं प्रसिद्धिमगमत्

Wouldst thou the young year's blossoms and the fruits of its decline,
And all by which the soul is charmed, enraptured, feasted fed ?
Wouldst thou the earth and heaven itself in one soul name combine ?
I name thee, O Shakuntala and all at once is said."

महामहोपाध्यायवासुदेवविष्णुमिराशीमहाभागेनाऽस्य पद्यस्य संस्कृतभाषायामेवमनुवादो विहितः ।

वासन्तं कुसुमं च युगपद् ग्रीष्मस्य सर्वं च यद्–
यच्चाऽन्यन्मनसो रसायनमतः सन्तर्पणं मोहनम् ।
एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो–
रैश्वर्यं यदि वाञ्छसि प्रियसखे ! शाकुन्तलं सेव्यताम् ।।

कालिदासस्य कृतेः आङ्गलभाषायां कृतेन प्रथमरूपान्तरेण विदेशेषु किं कृतमित्यनया उक्त्या स्वयं सिद्धमेव । शाकुन्तलं विहाय जोन्समहोदयेन मनुस्मृतिगीतगोविन्दावपि आङ्लभाषायामनूदितौ । सरविलियमजोन्समहोदयानन्तरं हेनरीटामसकालब्रुक ( Henry Thomas Colbrooke ) ( १७६५-१८३७ ई० ) महोदयोऽपि एतां देवभूमिमागत्य देववाणीमधीतवान् । जोन्सस्थापितप्रणाल्या स न्यायवेदान्तदर्शनसाहित्यव्याकरणवेदादीनां संस्कृतभाषायाः विषयाणां चाऽध्ययनमचीकरत् । कालब्रुकमहोदयः विविधविषयेषु प्रकीर्णैर्लेखैः देववाण्याः महत्वं प्रतिपादितवान् । तेनाऽरबीफारसी-प्रभृतयोऽन्या अपि बह्व्यः भाषाः अशिक्षत ।

अलेक्जेण्डर हैमिल्टन (Alexander Hamilton) नामाऽऽङ्गलविद्वान् अपि (१७६५-१८२४ ई०) भारतदेशमागत्य संस्कृतभाषां सम्यगधीतवान् । १८०२ ई० वर्षे सः स्वदेशं प्रत्यावर्तत, मार्गे च संयोगवशात् सः फ्रांसदेशे किञ्चित्कालमतिष्ठत् । तस्मिन् समये सकलेऽपि योरोपखण्डे नैपोलियनस्य एव प्रभुत्वमासीत् । आङ्गलदेशीयाः समस्ताः जनाः सन्धिभङ्गात् फ्रांसदेशे बन्दीगृहे निगृहीताः । हैमिल्टनमहाभागोऽपि कारागारस्य कोष्ठिकासु स्वजीवनं व्यत्येतुं (यापयितुं) बाध्यो बभूव । तत्र बन्दीजीवने महाभागोऽयं फ्रेडरिकश्लेगल (Friedrich Schlegel) महोदयान् अन्यांश्च तद्देशवास्तव्यान् संस्कृतमपाठयत् । कालान्तरेऽपि सः देववाणीं प्रति महतीं श्रद्धामदर्शयत् । रामायण-महाभारत-मनुस्मृति-भगवद्गीता-प्रभृतिग्रन्थानां विशिष्टांशभागान् शार्मणदेशीयभाषायामनूदितवान् ।

श्लेगलवंशीयौ द्वौ भ्रातरौ—"आगस्ट विल्हेम वान" August-Wilhelm van (१७६७-१८४५) फ्रेडरिकवान् Friedrich van (१७७२-१८२९) महाभागावपि भारतीयप्राच्यसंस्कृतविद्याप्रचारे महत्वपूर्णं स्थानं वहतः । आगस्तमहोदयः शेक्सपियरनाम्नः महाकवेः बहूनि नाटकानि शार्मण्यदेशीयभाषायामनूदितवान् । १८१८ ई० वर्षे शार्मण्यदेशे नवस्थापिते वान्विश्वविद्यालये संस्कृतस्य प्रथम-प्राध्यापकपदे सम्मानमलभत । एकवर्षानन्तरमेव सः स्वप्रसिद्धां रचनां On the present condition of Indian Philology ) (भारतीयभाषाविज्ञानस्य वर्तमानदशा) इति नाम्ना प्राकाशयत् । भारतीयदेवशास्त्रे प्रच्छन्नं विविधकल्पनाचातुर्यं भारतीयदर्शनस्य-आध्यात्मिकसारं च प्रशंसन् सः संस्कृताऽध्ययनस्य लाभान् बहुशः

प्राकटयत् । शार्मण्याऽऽङ्गलदेशौ प्रति देववाण्याः तुलनात्मिकां प्रतिष्ठां प्रतिपादयन् सः एवं वदति "आङ्गलदेशवासिनः भारतवर्षे स्वराज्यविस्तारेच्छया संस्कृतं पठन्तु किन्तु शार्मण्यदेशीयाः तद्भाषायाः गौरवेण स्वान्तःसुखमधिगन्तुमेव संस्कृतं पठन्तु ! आङ्गलदेशीयाः स्वसत्वोत्कर्षेण प्रभावेण वा भूमावेवाऽऽधिपत्यं स्थापयितुं प्रभवन्ति, संस्कृतभाषा तु सकलसंसारवासिनां कृते समपैव, तत्रैकाधिपत्यं न कस्यचिदपि प्रभवति । यस्मिन् समये भारतवर्षे संस्कृतसाहित्यमुद्रणं स्वशैशवाऽवस्थायामेवाऽवर्तत, सः वाननगरे संस्कृतसाहित्यस्य मुद्रणार्थं मुद्रणालयमप्यस्थापयत् । मुद्रणकलायाश्च नानारूपान् विरचय्य देवनागरीलिप्यां लेटिनाऽनुवादेन श्रीमद्भगवद्गीतां प्राकाशयत् । वाल्मीकीयरामायणस्याऽपि सः मुद्रणं प्रारब्धवान्, यत्र प्रथमो बालकाण्ड एव मुद्रितः ।

अस्माकं देशस्य संस्कृतविद्यार्थिनः 'अलेक्जेण्डरहैमिल्टनमहोदयात् नैपोलियनस्य बन्दीगृहवासिनः मेधाविनोऽन्तेवासिनः श्लेगलमहोदयाः कियन्तः आसन् देववाणीसंस्कृताऽनुरागिणः इति सर्वविदितमेव । श्लेगलभ्रातराविमौ संस्कृताऽऽङ्गलभाषयोः विविधरचनाक्षेत्रेषु स्वकौशलं प्रदर्श्य भाषाविज्ञानक्षेत्रेऽपि महतीमुपलब्धिमाप्तवन्तौ । फ्रेडरिकमहोदयस्य कृतिभिः बहवः शार्मण्यदेशीयाः जनाः संस्कृतज्ञानमलभन्त । तस्मिन् समये पाश्चात्याऽऽधुनिकप्रणाल्या यूनानीलैटिनशार्मण्यसंस्कृतभाषासु संस्थितानां शब्दानां प्रायशः ध्वनिभाषाविज्ञानदृष्ट्याऽध्ययनं क्रियते स्म । कतिपयान् ध्वनिनियमान् सम्यग् विविच्य तेन श्लिष्टाऽश्लिष्टभाषे द्वे रूपे वर्गीकृते । एतासु भाषासु प्रत्ययोपसर्गसंघातेन कियत्परिवर्तनं भवति इति सम्यक् परिलक्ष्यते ।

आगस्टविल्हेमवानमहोदयः श्लिष्टाऽश्लिष्टयोः भाषयोः विभाजनमकरोत् । भाषाणामैतिहासिकाऽध्ययनस्याऽयं द्वितीयः समर्थकः आसीत् । चीनदेशस्य भाषायाः पृथङ्महत्वं च न्यवेदयत् । प्रत्ययाः पूर्वं स्वतंत्राः आसन् कालान्तरेऽर्थवैशिष्टयं प्रादर्शयन् ।

श्लेगलभ्रात्रोः प्रभावात् जैकोवग्रिम Jacov grimm (१७८५-१८६३) फ्रान्त्सवाप Franz Bopp महोदययोः देववाण्याः अध्ययनं प्रत्यभिरुचिः जाता । जैकोवग्रिममहोदयेन प्रतिपादितो नियमः ग्रिमनियमनाम्ना भाषाविज्ञानक्षेत्रे महती क्रान्तिमुदपादयत्" इति सर्वविदितमेव । तुलनात्मकव्याकरणप्रतिपादनात् वापमहोदयस्य नाम प्रसिद्धमभूत् । विंशतिवर्षीयः एव सः पेरिसनगरे संस्कृतशिक्षामारभत । यूनानीलैटिनप्राचीनपासीकारऽवेस्ताशार्मण्यगाथ्यादिभाषाः सम्यगधीत्य १८१६ ई० वर्षे "धातुप्रक्रिया" नामकंपुस्तकं शार्मण्यदेशीयभाषायां प्राकाशयत् । १८३३, १८५४ ई० वर्षयोः मध्ये बापमहोदयेन "भाषाविज्ञानस्य तुलनात्मकव्याकरणस्वराघातयोः विविधा सिद्धान्ताः प्रतिपादिताः ।

देववाण्याः संस्कृतस्य भारतदेशाऽन्तेवासी अलेक्जेण्डरहेमिल्टनमहोदयः कियन्महान् संस्कृताऽनुरागी बभूव यन्नैपोलियनस्य बन्दीगृहसहयोगिनोऽपि संस्कृतमशिक्षयत्, येषु श्लेगलवन्ध्वोः प्रभावात् ग्रिमबापमहोदयौ शार्मण्यदेशे क्रान्तिदर्शकौ जातौ ।

एतदनन्तरं शार्मण्यदेशीयसंस्कृतविद्वत्सु रुकर्ट (Ruckert) महोदयस्य नाम प्रसिद्धं वर्तते । बापमहोदयेन भारताऽऽनीतः सम्पादितश्च नलोपाख्यानग्रन्थः अनेनैव शार्मण्यदेशीयभाषायाम् अनूद्य प्रवेशितः । सावित्र्युपाख्यानं गीतगोविन्दममरुकशतकमन्ये चाऽनेके

ग्रंथा: विद्यन्ते येषां रूवर्टमहोदयेन शार्मण्यभाषायामनुवादो विहित. ।

हम्वोल्टशापनहावरमहोदयावपि शार्मण्यदेशे भाषाविज्ञानप्राच्य-विद्यासंस्कृतप्रचारेषु सम्यग् योगं दत्तवन्तौ । विल्हेमवानहम्वोल्ट Wilhe-lmVan Humboldt महोदय: स्वशिक्षामन्त्रित्वकाले शार्मण्यदेशीय-राजधान्यां वर्लिननगरे विश्वविद्यालयं स्थापितवान्, तत्र च संस्कृत-तुलनात्मकव्याकरणप्राच्यविद्याऽध्ययनार्थं विशिष्टां व्यवस्थां कृतवान् । वाल्यकालादेव देववाण्यनुरागी स केनचिच्छिक्षकेण विनाऽपि स्वपरिश्रमेणैव स्वाध्यायं कुर्वन् संस्कृतमधीतवान् । श्लेगलमहोदयेन सम्पादितासु शोधपत्रिकासु बहून्: संस्कृतसम्बन्धिनः लेखान् लिलेख । श्लेगलमहोदयस्य श्रीमद्भगवद्गीतायाः विषयम-धिकृत्य लिखितान् विविधान् लेखान् पठित्वा स तस्याऽनन्यभक्तो बभूव । वर्लिनविश्वविद्यालयस्य प्रकाशनेषु स गीताविषयकमेकं विशिष्टं संस्करणं प्रकाशितवान् । "जगन्नियन्त्रा परमेश्वरेण गीता-ऽध्ययनार्थं मम जीवने प्रेरणा वितरिता" इति कृत्वा जगदीश्वरं प्रति महती कृतज्ञता तेन स्वमित्रबन्धुसम्बन्धिनां पार्श्वे प्रेषितेषु बहुषु पत्रेषु प्रकटिता । "महाभारतीयाऽऽख्यानकमिदं भूमण्डलस्य सकल-दर्शनानां सारं मूलं च विद्यते" इति सः बहुशः प्रत्यपादयत् । आर्थर-शापनहावर Arthar schopenhoucr (१७८८-१८६०) महा-भागः शार्मणदेशीयदर्शनकारेषु अतिलोकप्रियः आसीत् । स अस्माकं देशीयैः उपनिषद्भिः सुप्रभावितः । उपनिषदः दार्शनिकविचारान् स सम्यग्व्यचारयत् । मूलग्रन्थान् पठितं स नैव शशाक । मुगल-सम्राडवरंगजीवस्य ज्येष्ठभ्रातुः दाराशिकोहमहोदयस्याज्ञया उपनिषदां पारसीकभाषायां रूपान्तरणमप्यभवत् । तान् संलक्ष्य शार्मण्यदेशी-

याऽनुवादमेव शापनहावरमहोदयः पठितवान् । उपनिषदां दार्शनिक-सिद्धान्ताः शार्मण्यदेशवासिनां विदुषां कृते इन्द्रजालवदेव तस्थुः, तथापि सः नित्यं रात्रौ शयनात्पूर्वमुपनिषदां स्वाध्यायमकरोत्, निद्रायामलौकिकं सुखञ्चाऽन्वभवत् । "उपनिषद्भिरेवाऽहं शाश्वतीं शान्तिमध्यगच्छम्, आभिरेव च नूनं मरणान्तरमपि शांन्तिं लप्स्ये" इति तस्याऽमरवाणी विश्वविचारकैरद्यापि स्मर्यते ।

महात्मनो गौतमबुद्धस्य दार्शनिकसिद्धान्तानपि शापनहावर महाभागः सम्यगध्यगीष्ट । एतेन सन्तुष्टश्च स स्वदेशीयभाषायां बौद्ध-सिद्धान्तानाश्रित्य बहून् ग्रन्थान् लिलेख, याँश्चाऽधीत्य योरोप-देशेष्वापि बौद्धमतस्य सम्यक् प्रचारः प्रसारश्चाऽभवत् । १८१८ ई० वर्षे प्रकाशितम्-"दि वर्ल्ड ऐज विल ऐण्ड कन्सेप्शन The World as will and conception नामकं पुस्तकं शापनहावर-महोदयस्य सर्वोत्कृष्टा कृतिः विद्यते । यस्यां स प्राच्यदर्शनस्य वि-विधसिद्धान्तान् विस्तरशः अवर्णयत् । वेदान्तदर्शनस्य मनुस्मृते-रपि च विशिष्टः आकृष्टोऽयं मनस्वी ।

योरोपमहाद्वीपे प्रकाशितेषु सकलसंस्कृतग्रन्थेषु शार्मण्यदेशे प्रकाशित सेण्ट पीटर्सवर्ग St Peterss burg संस्कृतशार्मेणकोषः सर्वोत्कृष्टः वर्तते । दशसहस्रपृष्ठानां त्रयोविंशतिखण्डेषु प्रकाशितं सर्वेषां महत्वपूर्णशब्दानां शार्मण्यभाषायां विस्तृतं विवेचनं वर्तते । बाटलिंग-राथ Bohtling and Roth नामानौ शार्मण्यदेशीयौ द्वौ विद्वांसौ वहुभिः सहयोगिभिः सह त्रयोविंशति (१८५२-७५) वर्षैः कोषं पूर्णवन्तौ । रूसदेशीयराजकीयाकादमीप्रकाशनस्य महान्तमार्थिकभारमवहत् । यदा प्रकाश्य पूर्णो ग्रन्थः समक्षमागतः,

तदा सततोद्योगपरायणः बाटलिंगमहोदयः कोषस्य संक्षिप्तसंस्करणार्थमपि प्रयत्नशीलोऽभवत् । एकल एव सः आगामिषु चतुर्दशवर्षेषु ग्रन्थमिमं खण्डद्वये कृतवान् । पाश्चत्यदेशीये वैदिकसाहित्याऽनुशीलनस्येतिहासे कोषविशिष्टं सर्वोत्कृष्टं महिमायुक्तमवर्त्तत ।

वेदाऽनुशीलनस्य परम्परायां महर्षिर्यास्काचार्यः प्रथम एव वर्तते । तत्कृतनिश्चयानुगुणमेव सर्वे विद्वांसः वेदान् विचारयन्ति । त्रयोदश-चतुर्दशशताब्दिमध्ये लिखितं सायणाचार्यस्य ऋग्वेदभाष्यं सर्वाधिकं प्रचलितं वर्तते । तस्मिन् सायणाचार्यः स्वतः एव प्रतिपादयति यत् सः यास्कमतमनुसरति । अन्येषु बहुषु स्थलेषु स यास्कविचारान् पूर्णतया भ्रान्तान् प्रतिपादयति । प्रायः तद्विरुद्धमेव स्वभाष्यं च प्रस्तौति ।

रुडोल्फराथमहोदयः पाश्चात्याऽऽलोचनपद्धत्या वेदाऽध्ययनमारब्धवान् । स स्ववैज्ञानिकबुद्ध्याऽऽलोचनप्रणाल्या एव वेदानां विवेचनं कृतवान् । एच० एच० विलसन H. H Wilson महोदयः ऋग्वेदस्य सायणभाष्यमक्षरशः आंग्लभायाषां रूपान्तरितवान् । यदा सः (राथमहोदयः) एवंविधम् ऋग्वेदमपश्यत् तदा वैज्ञानिकबुद्ध्या प्रतिकूलमेव स्वमतममन्यत, एतेनैव योरोपखण्डेषु वर्तमानाऽनुसन्धानसाधनेषु सन्निहितेषु वेदानां वैज्ञानिकस्वरूपमेवाऽऽधिक्येन परिदृश्यते । आख्यानेषु ऐतिहासिकमहत्वमपि प्रादर्शयत् ।

विगतशताब्द्याः मध्यकालं यावत् ऋग्वेदस्य पाण्डुलिपिः योरोपदेशेषु विशेषतया लन्दनपेरिसादिनगरेषु जगाम । भारतदेशीयाः ब्राह्मणाः स्वधर्मस्य मूलं वेदं पाश्चात्यम्लेच्छहस्तस्पर्शनात् संरक्षितुं पूर्णतया प्रयतितवन्तः ।

इत्थं तेषु विरुद्धेषु सत्स्वपि वैदेशिकाः विद्वांसः वेदलाभमगृह्णन्नेव । फ्रेडरिकरोजन (Friedrich Rosen) नामा शार्मण्यदेशीयः मनीषी ऋग्वेदे श्रममारभत । १८३८ई० वर्षे तेन प्रथमाऽष्टकं प्रस्तुतम् । अस्य संस्करणस्य सहायतया प्राच्यविद्याविशारदः फ्रांसदेशीयः युगेन वरनोफ ( Eugene Burnouf ) महोदयः स्वान्तेवासिनः ऋग्वेदस्याऽध्ययनं प्रति प्रैरयत् । तस्य शिष्येषु मैक्समूलरमहोदयः सर्वप्रधानः आसीत् । त्रयोविंशतिवर्षीयः शार्मण्यदेशीयः वेदप्रवृत्ति प्रति समाकृष्टः स्वकार्यं समग्रमेव जीवनं देववाण्याः समुत्कर्षाय वेदानामध्ययनाय तेषां प्रचाराय एव समर्पयत् । शार्मण्यदेशेऽपि तस्य नाम संस्कृतभाषायां 'मोक्षमूलर' इत्येव प्रसिद्धो बभूव यच्च स सहर्षं स्वीचकार । सायणाचार्यस्य भाष्येण सहितस्य ऋग्वेदस्य समालोचनायुतं संस्करणं प्रकाशयितुं सः सुनिश्चितां योजनामकल्पयत् । वृहदाकारग्रन्थानां प्रकाशने धनाऽभावः एका महती समस्या । तदानीं वेदानां मुद्रणार्थं धनं कथं संग्रहीतव्यमिति आख्यानकमपि मनोरञ्जकमेवाऽभवत् । तदानीं भारते वर्षे "पूर्वभारतसम्मेलनम्" ( ईस्ट इण्डिया कम्पनी ) ब्रिटिशसर्वकारस्य प्रतिनिधिरूपेण शासनं करोति स्म ।

तस्मिन् समये आङ्ग्लदेशीयानां शासनेनाऽस्मद्देशीयाः सकलाः एव प्रजाः उत्पीडिता अभवत् । तेषामत्याचारेण सन्तप्य विदेशीयसाम्राज्यस्य पूर्णतया विनाशार्थं १८५७ ई० वर्षे महत्सुयोजनाबद्धः स्वतन्त्रतासंग्रामः अभवत् । यस्य मूलकारणं कम्पनीसाम्राज्यस्य स्वार्थलिप्सा शासनेऽव्यवस्था चापि आसीत् । एतस्यामवस्थायां शासकीया सा संस्था स्वराज्यशासनस्य स्थित्यै महन्तं

संघर्षमकरोत्, परिणामतः संग्रामाऽनन्तरं १८५८ ई० वर्षे साम्राज्ञी विक्टोरियामहोदया भारतवर्षे शासनं कृतवती। स्वकीयेऽन्तिमे काले कम्पनी मोक्षमूलरसम्पादितस्य सायणाचार्यभाष्यसहितस्य ऋग्वेदस्य मुद्रणार्थं पुष्कलां धनराशिं स्वीकृतवती। अनेनोदार-कर्मणा सा सकलं जगदिदं दर्शयितुमिच्छति स्म, यत्सा भारतवर्षं केवलं चोषयितुमेव नैच्छत् अपितु तस्य संस्कृतेः देववाण्याः पुनरुद्धारार्थमपि प्रयत्नशीला आसीत्। मोक्षमूलरसम्पादितस्य प्रथमः खण्डः १८४९ ई० वर्षे, अन्तिमश्च खण्डः १८७४ ई० वर्षे प्रकाशितोऽभूत्। यदा भारतदेशीयाः विद्वांसो ब्राह्मणाः पाश्चात्य–शार्मण्यदेशे वेदाऽनुसन्धानमुद्रणप्रकाशनानां सूचनामापुः तदा विस्मयापन्नास्ते महत्कोलाहलं चक्रुः। इमे वेदाः म्लेच्छैः गौरकैः लिखिताः इति प्रसिद्धिः जाता। प्राचीनाडम्बरप्रियाः विद्वांसः एतेषां ग्रन्थानां भारते प्रवेशं प्रतिबन्धयितुमैच्छन्। केचन चाऽन्ये बहवो विद्वांसः तस्य संस्करणस्य च वैशिष्ट्यं प्रति आकृष्टाः सन्तः एतस्य विरोधमप्यकुर्वन्।

प्राच्यविद्याविशारदः शार्मण्यदेशीयो हौफ ( Hauf ) महाभागः पुण्य ( Puue ) नगरे श्रोत्रियविशिष्टानां सम्मेलनस्य वर्णनं प्रस्तौति। 'ते ब्राह्मणाः अस्य पाश्चात्यसंस्करणस्य स्पर्शमभि–पातकं मन्यस्ते स्म। स्वहस्तैः स्प्रष्टुमक्षमास्ते केवलमन्यवाचितमेव शृण्वन्ति स्म। अन्ततोगत्वा मोक्षमूलरस्य संस्करणेन प्रभाविताः सन्तः ते स्वपाण्डुलिपीः तदनुसारं शोधितवन्तश्च। एतेन शार्मण्य-संस्करणस्योत्कर्षः स्वयमेव सिध्यति।

मोक्षमूलरो देशमिममागत्य चिरं संस्कृतभारतीयदर्शनानि

वेदांश्चाऽन्वशीलयत् । सः स्वात्मकथायां प्रतिपादयति यत्—सः यथाकालं भारतवर्षात्प्रहितम् उपवीतश्राद्धकर्मणि पौरोहित्यस्य निमंत्रणं लेभे । राजा राधाकान्तदेवमहोदयः संस्कृत (भारतीय) दर्शनेषु तत्कृतश्रमं बहु प्रशशंस । अमरकविरवीन्द्रनाथटैगोरमहाभागस्य पिता महर्षिर्देवेन्द्रनाथटैगोरमहोदयः तं प्रति लिखितेषु पत्रेषु स्वीचकार—"यन्मोक्षमूलरमहाशयः वेदान् उपनिषदश्च सम्पाद्य योरोपवासिनः विदुषः प्राचीनाऽऽर्यावर्त्तीयर्षीणां विचारान–ध्येतुं समानावसरं प्रास्तौत् । एते ग्रन्थाः एतदवधि दुष्करपाण्डु–लिप्यामेव प्रच्छन्नाः बभूवुः । संसारस्य विभिन्नदेशेषु पुराकाले यत्संस्कृतेः सान्निध्यमासीत् तस्य पुनः संस्थापनाय इमे ग्रन्थाः एवं भाविनिकाले सक्षमाः भविष्यन्ति" इति ।

यद्यपि यस्मिन्काले मोक्षमूलरस्य ऋग्वेदभाष्यं प्रकाशितमभूत् तदानीमस्मिन्देशे मिथ्याऽऽडम्बरस्य प्राबल्यमासीत् अतएव च तस्य लोकप्रियता निरवच्छन्ना । यदा हि महर्षिः दयानन्दः सरस्वती देशोद्धारस्य महत्कार्यमारभत, स वेदानध्येतुमैच्छत् । बहुविधे प्रयत्ने कृतेऽपि स वेदानां मूलपुस्तकानि भारतवर्षे प्राप्तुं नाऽशक्नोत् । मोक्षमूलरमहोदयेनैव तस्य कृते शार्मण्यदेशात् वेदाः प्रहिताः यानधीत्य सः वेदाऽनुसन्धानमहत्वस्य पुनः प्रतिष्ठायै महत्क्रान्तिपरं–प्रयत्नं कृतवान् । सः स्वयमेव वेदान् सम्पाद्य लिलेख—

शार्मण्यदेशे जातेनाऽऽङ्गलदेशवासिना ।
मोक्षमूलरभट्टेन ग्रन्थोऽयं सम्पादितः ॥

विंशतिशताब्द्याः उत्तरार्धे सामान्येन सकलयोरोपदेशेषु विशेषतया शार्मण्यदेशे वैदिकसंस्कृतप्राच्यविद्यानां शिक्षणं विशिष्टां

प्रगतिमलभत । शार्मण्यदेशे आफ्रेक्ट (Aufrecht) महोदयः ऋग्वेदस्य द्वितीयाऽऽवृत्तिमैतरेयब्राह्मणस्य समालोचनायुक्तं संस्करणं च प्रकाशितवान् । ग्रेबमैन (Grabmann) नामा विद्यालयशिक्षकः १८७२ ई० वर्षे मोक्षमूलरसंस्करणमाधाररूपेण स्वीकृत्य शार्मण्य-देशीयभाषायाम् ऋग्वेदस्य रूपान्तरम् ऋग्वेदकोषं च प्रकाशित-वान् । तस्मिन्कोषे नानाप्रसंगाः एतादृशाः समाविष्टाः येनाऽद्यापि स विद्वद्भिः समाद्रियते । पीटर्सवर्गकोषस्य प्रधानसम्पादकः राथ-महाभागः भोजपत्रेषु लिपिबद्धस्याऽथर्ववेदस्य पलादिशाखायाः प्रतिमवलोक्य केनापि प्रकारेण महता श्रमेणैव स्वकीयभाषायां प्रकाश्य शार्मण्यदेशीयानां विदुषां कृते सुलभामकरोत् ।

वेव्वरनामाऽपि शार्मण्यदेशीयः विद्यायाः नानाक्षेत्रेषुप्रवीणः शुक्लयजुर्वेदस्य तैत्तिरीयसंहिताम्, तेन सहैव तस्य मित्रं वानश्रौडर (Van Schroeder) महोदयः मैत्रायणीकठसंहिताञ्च प्राकाशयत् । भाषाविज्ञानक्षेत्रे कुशलः ओल्डेनवर्ग (Oldenberg) महोदयोऽपि वेदस्य धर्मम्, खण्डद्वये विभक्तम् ऋग्वेदस्य विस्तृतं भाष्यम्, तस्य समालोचनायां च पृथक् विशालं ग्रन्थं च लिलेख । हिलेन-ब्रेन्ड (Hillenbrandt) महोदयः वैदिकदेवशास्त्रस्य त्रिखण्डात्मक विशालं ग्रन्थं प्रास्तौत् (प्रस्तुतंचकार) ।

पिश्चल-गेल्डनर ( Pischel and Geldner ) महोदयौ १८८९-१९०१ वर्षाणां मध्ये स्ववैदिकस्वाध्यायस्य त्रिखण्डात्मकं विशालम् ग्रन्थं प्रकाशितवन्तौ । यस्मिंश्च सायणाचार्यप्रवर्त्ति-ताऽस्मद्देशीयवेदभाष्यपरम्परायाः महत्वम्, अधुनातनं तदुपयोगं च सम्यग्वर्णितवन्तौ ।

शार्मण्यदेशीयसंस्कृताऽनुसन्धानस्येतिहासे हेनरीलुड्समहोदयस्य नामाऽपि प्रसिद्धः। स महात्मनो गौतमबुद्धस्य बौद्धधर्मम् प्रति स्वशैशवकालादेव संसारस्याऽऽप्तजनान् चकर्ष। सर्वाभिर्विद्याभिः सह शार्मण्यदेशीयाः जनाः अस्मिन् बौद्धसाहित्यान्वेषणविषयेऽपि प्रायतन्त। गुप्तपाण्डुलिपीनां पुनः प्राप्तयेऽपि स इच्छामकरोत्।

प्रथमशताब्दीयस्य प्राजः कनिष्कमहोदयस्य राजकविः "अश्वघोषः" गौतमबुद्धस्य जीवनं संलक्ष्य बुद्धचरितं नाम काव्यग्रन्थम् प्रणीतवान्। लुड्र्समहोदयः १९१० वर्षे संस्कृतपाण्डुलिपीनामन्वेषणार्थं प्रयतमानः मध्यैशियाप्रदेशस्य तुरफानस्थाने ग्रन्थानां विशालं समुदायमपश्यत्। तेषु महाकवेरश्वघोषस्य त्रीणि संस्कृतनाटकानि समुपलब्धानि। तत्रैकस्य नाम "शारिपुत्रप्रकरणम्" विद्यते। द्वेऽन्येऽपि नाटके तेनोपलब्धे किन्तु तेऽपूर्णे स्तः। ययोः कथानकोऽपि सम्यङ् नाऽवगम्यते बुधैः।

शारिपुत्रप्रकरणे नव अंकाः उपलभ्यन्ते। महात्मनो गौतमबुद्धस्य शिक्षयोपदेशेन च प्रभावितौ शारिपुत्रमौद्गलायननामानौ युवानौ बौद्धधर्माऽनुसारम् स्वजीवनम् यापयितुं समकल्पयताम्। अन्ये नाटके प्राप्ते तेत्वपूर्णे एव, तयोः कर्त्तुर्नामाऽपि नोल्लिखितः। शैलीविषयावलोकनेन ते अश्वघोषविरचितौ एव प्रतीयेते। अश्वघोषकविः नूनमेव कालिदासादनन्तरवर्त्ती। तस्य कृतीनाम् अनुसन्धानेन संस्कृतनाट्यसाहित्येतिहासे महती क्रान्तिः जाता। यस्य श्रेयः शार्मण्यदेशीयः लुडर्समहोदयः एव प्राप्नोति।

बौद्धसाहित्यस्याऽन्वेषणेऽनुसन्धानेऽपि च शार्मण्यदेशीयाः विद्वांसः विशिष्टां प्रगतिमकुर्वन्। तेषु ओल्डनवर्गमहोदयः वेदाऽध्यय-

नेन सह पालिभाषाविज्ञानस्याध्ययनं प्रति पूर्णोत्साहं प्रकटितवान् । विनयपिटकस्य शार्मण्यभाषायामनुवादे जाते तत्र बौद्धधर्मप्रचारस्य मार्गः प्रशस्तो जातः प्रचारकाश्च महतीं सिद्धिमवाप्नुवन् । गौतम-बुद्धजीवनशिक्षादर्शनम् (Buddha his life in teaching his order) इतिपुस्तकम् शार्मण्यदेशीयपाठकेषु वर्त्तते, बौद्धानां सन्दर्भग्रन्थरूपेण चाद्यापि सादरं सर्वैः स्वीक्रियते । विल्हेम गाइजर Wilhelm Gaiger नामाऽन्यो विद्वान् पालिभाषायाः व्याकरणस्य आदिमं सर्वोत्कृष्टं च ग्रन्थम् शार्मण्यभाषायाम् अलिखत् । लङ्का-देशस्य बौद्धेषु प्रचलितं, महावंशग्रन्थमपि सः स्वभाषायां पर्यव-र्त्तयत् । कालान्तरे स लङ्कादेशस्य सिंघालीजभाषायामधिकारी विद्वान् जातः । यदा लंकादेशवासिनः स्वसिंघालीजभाषायाः सन्दर्भ-कोषनिर्माणार्थम् योजनाम् व्यचारयन् तदा गाइजरमहोदयः तत्र लंकादेशे परामर्ष्टुमाहूतः, यद्यपि तत्र पिश्चलविंडिशप्रभृतयः केचना-न्येपि शार्मण्यदेशीयाः प्रख्याताः बौद्धमनीषिणः विद्यन्ते स्म ।

लुडर्समहोदयो धम्मपदस्य संस्कृतरूपान्तरस्य उदानवर्गस्य समा-लोचनापूर्णं संस्करणं प्रस्तुतवान् । एतस्मिन् समये सः इतस्ततः प्रसृताः शताधिकपाण्डुलिपीः सम्यक् पर्यालोचयत् । दुर्दैववशादेव प्रथमविश्वयुद्धानन्तरमस्य संस्करणस्य सर्वाः प्रतयः प्रणष्टाः । उपोद्घातप्रस्तावनेऽवशिष्टे कथंचित् । ताभ्यामपि बौद्धानां महत्वपूर्णतथ्यानां सम्यग्ज्ञानं भवति । उभावपि विहेमगाइजर-लुडर्समहोदयौ ऋषिभूमिमस्माकं द्रष्टुं स्वप्रवासप्रसंगे भारतवर्ष-मप्यागच्छताम् । पुरावर्त्तिमनीषिणः प्रति स्वश्रद्धाञ्जलयः कृतज्ञताश्च प्रकटितवन्तौ ।

बौद्धधर्माद् भिन्ना जैनशाखाप्येका विद्यते यत्र शार्मण्यविद्वांसः स्वविशिष्टौत्सुक्यं श्रमं च प्रकटितवन्तः। जैकोबी वेवर ल्यूमैन (Jacobi-weber and Laumann) महोदयाः एतद्विषयकाः महन्तः अनुरागिणः। तेषु जैकोवीमहोदयः एव नूनं शार्मण्यदेशीयः महत्तमप्राच्यविद्याविशारदः वर्तते, यस्य नाम जैनधर्मप्रियेषु मनीषिष्वद्यापि सादरं स्मर्यते। अनेन महाभागेन जैनमतस्य विविधांगोपांगेषु स्वकौशलं प्रकटितम्। जैनबौद्धमतयोः पार्थक्यं योरोपीयविदुषां समक्षे सर्वप्रथमं जैकोबीमहोदय एव प्रत्यपादयत्। महाराष्ट्री-प्राकृतप्रभृतिभाषासु उपलब्धाः विविधजैनकथाः सः व्याकरणेन सह शार्मण्यभाषायामन्ववदत्। वर्तमानशताब्द्याः प्रथमविश्वयुद्धारम्भे कलिकाताविश्वविद्यालयस्य निमंत्रणमधिगत्य एष एतां देवभूमिं (भारतम्) पुनराजगाम। एतस्यैषा द्वितीया भारतयात्राआसीत्। विश्वविद्यालये जैकोबीमहाभागः जैनसिद्धान्तान् विशिष्टतया समर्थितवान्। तस्य विशिष्टां योग्यताम् अनुभूय जैनमतानुयायिनः तं "जैनसिद्धान्तदिवाकर" इत्युपाधिना सम्मानितवन्तः। एतस्मिन्नवसरे एवापि सः अपभ्रंशसाहित्यस्य नानागुप्तनिधीन् अन्वेषितवान्।

शार्मण्यदेशीयभाषायां शुक्लयजुर्वेदस्य सम्पादको वेवरमहाभागः जैनपाण्डुलिपीनां वर्लिनसंग्रहस्य महत्वपूर्णसूचीग्रन्थान् सम्पादयति स्म। वेवरमहोदयः एव जैनश्वेताम्बरसम्प्रदायस्य सिद्धान्तग्रन्थान् सर्वप्रथमं शार्मण्यविदुषां समक्षे प्रस्तुतवान्। वेवरमहोदयोऽपि शार्मण्यदेशाद् इमां देवभूमिम् (भारतदेशम्) आगत्य इतस्ततः प्रसृतान् जैनसिद्धान्तस्य वहुविधपाण्डुलिपिग्रन्थान् संग्रहीतवान्। तेषां द्वे प्रती निर्मिते। एका शार्मण्यदेशस्थवर्लिनपुस्तकालये,

द्वितीयाऽन्या लन्दनस्थितभारतकार्यालयपुस्तकालये सुरक्षिता कृता। हेमचन्द्राचार्यस्य ग्रन्थानामपि विशिष्टसंस्करणं प्रकाशितवान्।

ल्यूमैनमहोदयोऽपि भारतवर्षमागत्य शार्मण्यदेशस्थितस्ट्रासबर्ग (Strassburg) विश्वविद्यालयस्य पुस्तकालयाय बहुजैनपाण्डुलिपीनां संग्रहमकरोत्। तान् ग्रन्थानधीत्य सः स्वकीयशार्मण्यभाषायां नानाजैनग्रन्थान् लिखितवान्। येषु जैनसिद्धान्तः (The Doctrine of the Jainas) नाम पुस्तकं प्रसिद्धं वर्तते। एवं जैकोबीवेबरल्यूमैननामानः त्रयः शार्मण्यदेशीयाः विद्वांसः वर्त्तन्ते येषां जैनसिद्धान्तप्रचारे महत्वपूर्णं योगदानं वर्त्तते।

जैनधर्माचार्येषु भारतदेशीयाः विजयधर्मसूरी-विजयेन्द्रसूरी-जयन्तविजय-पुण्यविजयनामानः आचार्यमहाभागाः प्रमुखाः सन्ति ये पाश्चात्यविदुषां वर्तमानसमालोचनाप्रणाल्याः साहाय्येन स्वसिद्धान्तान् सकलेऽपि संसारे विस्तारितवन्तः, पाश्चात्यालोचकाः चिरं तेषाम् ऋणिनः भविष्यन्तीति।

अष्टादशशताब्द्याः मध्यकालादेव यदा आङ्गलदेशवासिनः अस्मिन् देशे शासनं प्रारब्धवन्तः, तदाप्रभृति एव ते भारतमागत्याऽस्य देववाण्याः संस्कृतेश्च परिचयं प्राप्तवन्तः। आङ्गलदेशाऽपेक्षया शार्मण्यदेशवासिनः भारतदेशागमनार्थं समानसुविधाऽवकाशं न प्राप्तवन्तः। मोक्षमूलरानन्तरं, मार्टिनहाग (Martin haug) महोदयाः शार्मण्यदेशीयाः भारतमागच्छन्। १८५९ ई० वर्षे इमे महाभागाः पुण्यनगरे संस्कृतशिक्षाणार्थं नियुक्ताः। १८६६ ई० वर्षे शार्मण्यदेशीयान्यतरः फ्रांज कीलहार्न (Franj Kielhorn) महोदयः तस्योत्तराधिकारपदे नियुक्तः।

तस्मिन्नेव समये जार्जबुलरमहाभाग: मुम्बय्याम् एलाफिन्सटनमहाविद्यालये (Elphinstone college) संस्कृताऽऽचार्यः नियुक्तो वभूव । बुलरकिलहार्नमहोययो: प्राच्यविद्याप्रचारे महत्वपूर्णं योगदानं वर्तते । लुडर्समहोदय: अनुभवति यत् तावेव भारतीयविदुष: योरोपीयसमालोचनाप्रणाल्या सह परिचयं कारितवन्तौ ।

शार्मण्यविदुषां कार्यपद्धतिं समालोच्य आंगलदेशीया: देववाण्युपासका: अप्यस्माभि: विचारणीया: ।

आङ्गलदेशीया: तु भारतवर्षेण सह शासनसम्पर्कं प्राप्य संस्कृतस्य प्राचीनमनीषिणां विचारै: बिना देशान् शासितुं न शेकु: । अत: ते तु राज्यविस्तारेच्छया एव संस्कृतमपठन् । यदा "ईस्टइण्डियाकम्पनी" इति शासकीयसंस्थाया: कार्यसीमा विस्तृता तदानीम् अधिकृता: जना: सम्यग्रीत्या शासनं प्रचालयितुमेव संस्कृतप्रचारस्याऽऽवश्यकतामनुभूतवन्त: । ये आङ्गलनवयुवका: शासनकार्यार्थं भारतागमनमिच्छन्त: शासकीयसेवां वाञ्छन्ति स्म । तेषां कृते इंगलैण्डदेशे हेलीबरी ( Hailey bury ) क्षेत्रे "ईस्टइण्डियामहाविद्यालय' नाम्ना विशिष्टा संस्था एतन्निमित्तमेवाधिकारिभि: स्थापिता । भारतागमनात् पूर्वमेव प्रत्याशिनां कृते यस्या: परीक्षाया: उत्तीर्णता आवश्यकीया भवति स्म तत्र संस्कृतशिक्षा आवश्यकीया आसीत् । मोनियरविलियम्समहाभाग: तस्मिन्नेव महाविद्यालये १८४४ ई० वर्षे संस्कृततेलगूबंगीयभाषाणां शिक्षणार्थमाचार्यरूपेण नियुक्त: आसीत् । परीक्षाप्रश्नपत्रे आङ्गलभाषाया: काव्यखण्डस्य संस्कृताऽनुवादोऽप्यावश्यक: आसीत् । परीक्षार्थिनां निर्देशार्थमेव मोनियरविलियम्समहाभाग: संस्कृताऽऽङ्गलकोषं १८५१ ई० वर्षे

प्रकाशितवान् । कालान्तरे १८६० ई० वर्षे आक्सफोर्डविश्वविद्यालये संस्कृतस्य वोडनशिक्षक (Boden Professor of sanskrit) रूपेण प्रतिष्ठापितः, कालान्तरे मोनियरविलियम्समहाभागः अभिज्ञानशाकुन्तलस्य आङ्गलव्याख्यानग्रन्थं, संस्कृताङ्गलकोषं च प्रणीतवान्; अन्यभाषास्वपि बहून् ग्रंथान् लिखितवान् ।

आधुनिकाऽऽर्यावर्त्तस्य महान् निर्माता, वैदिकधर्मस्य च वर्त्तमानयुगे पुनः प्रतिष्ठापकः महर्षिः दयानन्दसरस्वतीमहाभागः यदा "श्यामजीकृष्णवर्मा" नामानं युवानम् उच्चशिक्षाप्राप्त्यर्थम् इंगलैण्डदेशगमनाय प्रैरयत्, तदा सः एतस्मै एव आक्सफोर्डविश्वविद्यालयस्य संस्कृताचार्याय मोनियरविलियम्समहाभागाय विशिष्टं परिचयपत्रं दत्तवान्, यन्महर्षेः सकलमानवान् विद्याव्यसनिनः प्रति विशिष्टां सद्भावनां प्रकटयति, सन्तु नाम ते महर्षेः सिद्धान्तविरोधिनः किं तेन ।

विलियम्समहाभागः एच.एच. विलसनमहोदयानन्तरमेव हि आक्सफोर्डविश्वविद्यालये इमां पदवीमलङ्कृतवान् । ऋग्वेदीयसायणभाष्यस्याङ्गलानुवादः अनेनैव सर्वप्रथमं प्रस्तुतः । संस्कृतव्याकरणस्य महत्वपूर्णः ग्रन्थोऽपि तेन १८४९ ई० वर्षे प्रकाशितः ।

एतयोः महानुभावयोरनन्तरम् "आर्थर ए मेकडानल (Artheor A Macdonell) नामा विद्वान् आक्सफोर्डविश्वविद्यालये एतस्मिन् गौरवास्पदे पदे नियुक्तो बभूव । एच. एच. विलसन —मोनियरविलियम्स-मेकडानलनामानः त्रय एव आक्सफोर्डविश्वविद्यालये संस्कृतबोडन(प्रोफेसर)रूपेण शिक्षाक्षेत्रे कार्यमकुर्वन्, संस्कृतज्ञेषु मेकडानलमहाभागः "मुग्धानल" इति प्रसिद्धः । संस्कृत-

साहित्यस्य इतिहास. संस्कृताऽऽङ्गलकोषः, वैदिकलौकिकव्याकरणयोः पृथग् ग्रन्थः च मुग्धानलस्य प्रमुखाः रचनाः । तस्य वैदिकपाठा अधुनाऽपि संसारस्य विविधविश्वविद्यालयेषु वेदपाठचक्रमे विद्यन्ते ।

मुम्बापुर्याम् एलफिन्सटनमहाविद्यालये पेटर पिटर्सन (Peter Peterson) महोदयः संस्कृताचार्यपदे प्रतिष्ठामाप्तवान् । शिक्षकरूपेण तेन १८८८ ई० वर्षे ऋग्वेदात् कतिपयानि सूक्तानि संगृहीतानि, यान्यद्यापि भारतीयविश्वविद्यालयेषु वेदपाठचक्रमे पाठ्यन्ते ।

विगतशताब्द्यां संस्कृतविद्याप्रचारार्थं ब्रिटिशशासकैः वाराणस्यां राजकीयमहाविद्यालयः संस्थापितः । सा एव राजकीया संस्था विस्तृता सती सम्प्रति श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयरूपेण देववाण्याः अविस्मरणीयां सेवां करोति । अस्य महाविद्यालयस्य प्रथमः प्राचार्यः ग्रिफिथमहाभागः आसीत्; यः आङ्गलदेशादागत्य अत्रैव देवभूमौ संस्कृतशिक्षामगृह्णात् । प्राचार्यः ग्रिफिथमहाभागः ऋग्वेदादिचतुर्वेदान् वाल्मीकीयरामायणं चाङ्गभाषायां पद्यरूपेणऽनूदितवान् । आङ्गलभाषायाः पद्येषु ज्ञानस्य सर्वोत्कृष्टग्रन्थान् प्रेक्ष्य योरोपवासिनः विद्वांसः अलौकिकं सुखमन्वभवत् । म्योरमहाभागः महाभारतमपि आङ्गलभाषायाः पद्येषु समाविष्टवान् ( समावेशितवान् ) ।

हिन्दीभाषायाः भाषाविज्ञानक्षेत्रेऽपि आङ्गलविद्वांसः स्वमहत्वमदर्शयन् । तेषु सरजार्ज अब्राहम ग्रियर्सननामा आङ्गलदेशीयः विद्वान् (१८५१-१९४१) विशिष्टः प्रतिभाशाली आसीत् । बाल्यकाले आङ्गलदेशे सः विविधभारतीयभाषाणां ज्ञानमुपार्जयत् । १८७३ वर्षे सः राजकीयसेवायां (I. C. S.) भारते वर्षे समाग-

च्छत्। शीघ्रमेव सः संस्कृतहिन्दीप्राकृताऽपभ्रंशभाषाणां ज्ञानं सम्यगुपार्जयत्। तस्य प्रसिद्धाः ग्रन्थाः 'गोपीचन्द्र की आत्मकथा (१८७३) मैथिलीव्याकरण (१८८०) विहारीसतसई (१८८९) पद्मावती (१९०२) वर्षेषु प्रकाशिताः अभवन्। भारतीयभाषाणां सर्वेक्षणम् ( Linguistic survey of India ) एतस्य सर्वोत्कृष्टा रचना वर्तते। अनेन ग्रन्थेन भाषाविज्ञानक्षेत्रे महती क्रान्तिरुत्पादिता १८८८-१९०३ ई० वर्षेषु अयं महाग्रन्थः एकविंशतिखण्डेषु स्वमहत्वं प्रकटयति। भारतीयमहाद्वीपेषूपलब्धानां १७९ साहित्यिकभाषाणाम्, ५४४ उपभाषाणां क्षेत्रविशेषेषु भाषणमात्रार्थं प्रयुक्तानामस्मिन् ग्रन्थे सम्यक् पर्यालोचनं विद्यते।

आङ्गलदेशे संस्कृतसम्बन्धिकार्येषु मुग्धानलस्य नाम प्रसिद्धं वर्तते। एष स्वयमेव ग्रन्थान् लिलेख, अपि च स्वशिष्यानपि गौरवमेतम् आप्तुं सक्षमान् चकार। तस्याऽन्तेवासिषु ए. बी. कीथ महाभागस्य नामोल्लेखनीयं वर्तते! महाभागोऽसौ एडिनवर्गविश्वविद्यालये संस्कृतभाषाविज्ञानयोः प्रधानाचार्यः आसीत्। संस्कृतरूपकसंस्कृतसाहित्यस्येतिहासबौद्धदर्शनानि महत्वपूर्णपुस्तकान्यनेनैव लिखितानि। शार्मण्यदेशे विण्टरनिट्जमहाशागः संस्कृतसाहित्यस्येतिहासं प्रणीतवान्—यत् कालान्तरे आङ्गलहिन्दीभाषायामप्यनूदितम्।

वर्तमानप्रगतौ अमेरिकादेशस्य नामाऽप्यविस्मरणीयं विद्यते। २०० वर्षाणां स्वाधीनताकालेऽनेन देशेन या प्रगतिः कृता सा सकलं संसारं विस्मापयतीति। योरोपदेशैः सहाऽस्मिन् देशेऽपि देववाण्याः संस्कृतस्याऽध्ययने महती प्रगतिः जाता। वेदभाषाविज्ञानक्षेत्रे ब्लूमफील्ड-

महाभागः बहुविधलेखनकार्यं करोति स्म । शार्मण्यदेशीयभाषाविज्ञान-पद्धत्या सम्यक् संस्कृतभाषासाहित्यं वेदं चाऽधीत्य स "भाषाविज्ञा-नम्, वेदस्य धर्मः "इति द्वे पुस्तके रचितवान् । शिकागोविश्ववि-द्यालये सः संस्कृतस्य प्रधानाचार्यरूपेण छात्रानशिक्षयत् । कोलम्बिया-विश्वविद्यालयस्य भारतीयेरानीसंस्कृतभाषाणां शिक्षकः जार्ज सी. ओ. हास (George C.O. Haas )महाभागः धनञ्जयकृतदश-रूपकस्य सर्वप्रथममाङ्गलभाषायामनुवादमकरोत् । ग्रन्थोऽयं १९१३ ई० वर्षे कोलम्बियाविश्वविद्यालयस्य संस्कृतप्रकाशनेषु स्वोचितं गौरवमावाप । संस्कृतभाषासाहित्यदर्शनस्याऽनुपमप्रभावैः सह तस्याऽभिनयकलाविज्ञानमपि विदेशीयविद्वत्सु विस्तृतम् । विलियमजो-न्सकृताऽभिज्ञानशाकुन्तलस्य रूपान्तरमेव स्वकीयभाषायां प्रेक्ष्य योरोपीयप्रेक्षकाः दिव्यानन्दमापुः ।

कालान्तरे अमेरिकादेशेऽपि संस्कृतरूपकाणामभिनयोऽभवत् । प्रसिद्धन्यूयार्कनगरे १९२४ ई० वर्षे महाकवेः शूद्रकस्य कृतेः मृच्छ-कटिकनामप्रकरणस्य आङ्गलभाषाऽनुवादस्याऽभिनयोऽभवत् । तं प्रेक्ष्य तद्देशीयाः प्रेक्षकाः कथं प्रभाविताः इति संलक्ष्य नाट्यकलायाः तत्कालीनप्रसिद्धाऽऽलोचकेन जोसेफवुडक्रुचमहोदयेन स्वभाषायाम-तिसारयुक्तैः शब्दैः प्रकटितम्, यत्संलक्ष्याऽस्मद्देशीयाः प्रथमप्रधान-मन्त्रिणः स्वर्गवासिनः पण्डितजवाहरलालनेहरूमहोदयाः स्वाऽन्तिमे सर्वोत्कृष्टे भारताऽनुसन्धान ( The Discovery of India ) ग्रन्थे एवम् अलिखन्—

An English translation of Shudraka's Mricchakatika was staged in New York in 1924. Mr. Joseph wood Krutch, the dramatic critic of the Nation, wrote of it as follows : "Here

if anywhere, the spectator will be able to see a genuin example of that 'pure art theatre' of which theorists talk, an here, too, he will be led to meditate upon that real wisdom the East which lies not in esoteric doctrine but in a tenderne far deeper and truer than that of the traditional Christianit which has been so thoroughly corrupted by the hard righteou ness of Hebraism............A play wholly artificial yet pro foundly moving because it it not realistic but real............wh ever the author may have been, and whether he lived in th fourth century or the eighth, he was a man good and wise wi the goodness and wisdom which come not from the lips the smoothly flowing pen of the moralist but from the hear An exquisite sympathy with the fresh beauty of youth an love tempered his serenity, and he was old enough to unde stand that lightheared story of ingenious complication coul be made the vehicle of tender humanity and confident goodne ............Such a play can be produced only by a civilizatio which has reached stability, when a civilization has thoug its way through all the problems it faces, it must come to re upon something calm and naive like this. Macbeth an Othello, however great and stirring th y might be, are bar barous heroes because the passionate tumult of Shakespeare the tumult produced by the conflict betweeu a newly awa kened sensibility and a series of ethical concepts inherite from the savage age. The realistic drama of onr own tim is a product of a like confusion; but when problems are settle and when passions are reconciled with the decisions of a intellect, then from alone remains............Nowhere in ou European past do we find, this sihe the classics, a work mo completely civilized."

अस्मिन् मृच्छकटिकप्रकरणे वयं रंगनाट्यकलायाः पूर्णं विकसितं च रूपं प्रेक्षामहे। कलायाः तादृशपद्धतावधुना विद्वांसः विचारयन्ति, यत् तत्प्राच्यप्रतीच्योः संस्कृती प्रत्यपूर्वः उपायनीकृतः निधिरेवास्ति वर्तमानयोरोपीयनाटकेषु क्रूरकृत्यानां प्रावल्यं वर्त्तते, येन प्रेक्षकाः अपि मानवोचितशीलतां व्यक्तुमर्हन्ति। अस्मिन् नाटके उपलब्धानां भावगाम्भीर्याणां हृदयपरिवर्तने राष्ट्रोत्थाने च महत्वपूर्णः योगः भवति। प्रकरणमिदं न्यूनमेव कृत्रिमदृश्यानि प्रस्तौति, तथापि तानि प्रेक्षकेभ्यः चाक्षुषप्रत्यक्षमिवाऽऽभान्ति। "अस्य रचनाकारः चतुर्थ्यामष्टम्यां वा शताब्द्यां समभवत् "इतिविवादेनाऽलम्। सः अनन्यो विद्वान् मनोविज्ञानवेत्ता चाऽऽसीत्। मानवहृदयस्य सूक्ष्मदशानां विभिन्नस्थितीनां च स सम्यग् अध्ययनं चकार। मृच्छकटिकप्रकरणस्य राजनीतेः चरमौत्कर्षे युगे एव निर्माणं सम्भवति' यत्र वाह्योपद्रवाणां शान्तिः, संस्कृतेश्च चरमोत्कर्षः स्यात्। आङ्गलकविशेक्सपीयरमहाभागानां मैकवेथाथेलोसदृशरूपकेषु पशुधर्मयुक्ताः एव प्रधान नायकाः सन्ति, ये च सभ्यतायाः संस्कृतेश्च आदर्शयुगस्य प्रतिनिधित्वं नार्हन्ति प्रायः वर्तमानपाश्चात्यरूपकाः मनोरञ्जनार्थं मनोवृत्तेश्च विप्रकृतिमात्रमेव प्रकटयन्ति। भारतीयार्यरूपकेषु च मानवोचितसकलदुर्व्यवहाराणां प्रशमनोपायाः वर्ण्यन्ते। एवम् आधुनिकपाश्चात्यरूपकग्रंथाः संस्कृतरूपकाणां नाटचकलाऽपेक्षया नूनमेवातीव निम्नतराः सन्तीति।

कस्यचिदपि देशस्य सभ्यतासंस्कृत्योः विकासे तदितिहासस्य महत्वपूर्णं स्थानं वर्तते। योरोपदेशीयाः विविधविद्वांसः भारतदेशस्य इतिहासमाध्यमेनाऽपि परातत्वं संस्कृतिं चाऽस्माकमन्वेष्टुमारब्धवन्तः। एतादृशेष्वितिहासकारेषु कर्नलजेम्सटाड (Col. James

Tod) महाभागस्य (१७८२-१८३६) नामातिप्रसिद्धं गौरवाऽऽस्पदं च विद्यते। राजस्थानस्येतिहासोऽस्माकं देशस्येतिहासे सर्वाधिक-गौरवाऽऽस्पदं मूलं च विद्यते। प्रदेशेऽस्मिन् यथा शौर्यस्योदाहरणानि प्रस्तुतान्यभूवन् तथा अन्यत्र न विद्यन्ते। अत्र वीराणां चरितानि सततगत्या सकलसंसारस्य जनान् विशेषतया प्रेरयन्तीति। टाड-महाभागः अस्य प्रदेशस्य विस्तृतमितिहासं लिखितवान्, १८२९–३२ ई० वर्षाणां मध्ये प्रकाशितवांश्च। टाडमहोदयः महाराणा-प्रतापादिनानावीरैः भ्रमितान् संग्रामपूतान् प्रदेशान् स्वयमेव गत्वा पर्यालोचयत्। राजस्थानस्य ऐतिहासिकप्रदेशान् परिभ्रम्य सम्यग् विवेच्य च स्वग्रन्थं निर्मितवान्। अस्यां यात्रायां तेन बहुविधकष्टाः अनुभूताः। टाडमहाभागस्य पिता भारतवर्षे शासकीयसेवायाम् (I. C. S.) अधिकारी आसीत्।

बाल्यादेवाऽमुं देशं प्रत्याकृष्टः १८०७ ई० वर्षेऽयं भारतदेश-मागच्छत्। १८३१ ई० वर्षे च स्वदेशं प्रत्यावर्तत। अत्रागत्य स्वसैन्यसंचालनप्रतिभां प्रदर्शयन् सः ब्रिटिशराजकीयसेनायामुच्चा-धिकारी चाऽभवत्। १८१३ ई० वर्षे राजस्थाने आङ्गलसैन्यप्रति-निधेः सहायकस्य (Assistant Resident) पदे, १८१८ ई० वर्षे राजनीतिकप्रतिनिधिपदे (Political Agent) सम्मानितः अभवत्। यदा लार्डहेस्टिंग्जमहाभागः तत्कालीनः महाप्रशासकः (Gouernor General) नैपालपिण्डारीणां विरुद्धं सैन्याऽभि-यानमारभत, तदा टाडमहाभागः नानाविधानि मानचित्राणि निर्माय स्वस्वामिभक्तिं प्रादर्शयत्। यदा च राजस्थानीयः शासकः भीमसिंह-महाभागः महाराष्ट्रीयजनानां संकुलेन त्रस्तः जातः, टाडमहाभागः

तस्मिन्नवसरेऽपि तस्य साहाय्यमकरोत् । तस्य परामर्शाऽनुसारं महाराणामहोदयः राजस्थानमेवाडप्रदेशीयकृषकाणामवस्थायाः अपि सम्यग्बोधं कृतवान् । राजस्थानीयस्य कस्यचिद् देशीयरावराजस्य माता एकस्मिन् रक्षाबन्धनाऽवसरे कर्नलजेम्सटाडमहाभागं प्रति स्वकृतज्ञतां प्रकाशयितुं रक्षासूत्रं सम्प्रेष्य तं भ्रातरं निर्मितवती। राजस्थानीयवीरस्वसृणाम् आङ्ग्लभ्रातॄन् प्रति सद्भावनायाः चरमोत्कर्षः विद्यते । एतादृशेष्वेव प्रसंगेषु राजस्थानस्य नानाप्रदेशान् सम्यक् परिभ्रम्य टाडमहोदयेन स्वप्रसिद्धेतिहासग्रन्थः निर्मितः ।

सरवूलजलेहेग (Sir Wolsale Haig) महाभागोऽपि भारतीयेतिहासाऽनुसन्धाने बहुविधं परिश्रममकरोत् । सः अनेकभारतवासिनाम् आङ्गलदेशीयानाञ्च विदुषां साहाय्येन कैम्ब्रिजहिस्ट्री आफ इण्डिया (Cambridge History of India) इति नाम्ना प्रसिद्धां रचनामरचयत् । विन्शैण्टस्मिथमहाभागो भारतदेशीयेतिहासमाङ्गलभाषायां विस्तरशः लिखितवान् । उभौ सरवूलजलेहेग-विन्शेण्टस्मिथमहोदयौ वर्तमानशताब्द्याः आरम्भे एव इमां देवभूमिमागतवन्तौ । तौ देशस्य विविधभागान् परिभ्रम्यैतिह्यतथ्याननुसन्धाय स्वत एव विचार्य वर्तमानवैज्ञानिकपद्धत्या स्वग्रन्थान् प्रस्तुतवन्तौ ।

अनेन सिध्यति नूनमेव बहवः विदेशिनः जिज्ञासवः अस्य देशस्य भाषासभ्यतासंस्कृतिमन्वेष्टुमिच्छन्तः येऽत्र समागताः ते स्वयोग्यताक्षमताऽनुरूपं लाभञ्चाप्तवन्तः । अस्माकं मातृभूमिः खलु स्पर्शमणिः विद्यते यस्याः स्पर्शमात्रेण काचलौहसदृशाः दरिद्राः राष्ट्रजनाश्च सौभाग्यश्रियः बहुविधगुणनिधीनवाप्य स्वर्ण-

सदृशाः समृद्धिशालिनः भवन्ति । यथाऽस्माकं पूर्वजाः सकलसंसारस्य गुरुजनाः कुशलक्षेमनियंत्रकाश्च बभूवुः तथा भविष्यत्काले वयमपि भूयास्म । पुराऽऽचार्यमनोः वाक्यं यथा भूतकाले तथाऽऽगामिकाले च सत्यं भूयात् ।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

मनुः ॥ २ । २० ॥

# अंशुमद्ग्रन्थमालायां प्रकाशिताः कतिपये ग्रन्थाः

| क्रमांकः | पुस्तकानि | लेखकः | मूल्यम् |
|---|---|---|---|
| १. | नैषधीयचरितम् (प्रथमः सर्गः) | —प्रो० शिवबालक द्विवेदी, डा० प्रकाशमित्र शास्त्री | १२.५० |
| २. | नैषधीयचरित का अभिनव समीक्षात्मक एवं व्याख्यात्मक अध्ययन | —प्रो० शिवबालक द्विवेदी, डा० प्रकाशमित्र शास्त्री | २५.९० |
| ३. | आर्ष-काव्य एवं प्रकृति | —डा० कान्तिकिशोर भरतिया | ४०.०० |
| ४. | नैषधीयचरित-विमर्श | —प्रो० शिवबालक द्विवेदी, डा० प्रकाशमित्र शास्त्री | १०.०० |
| ५. | नैषधीयचरित : एक अध्ययन | —प्रो० शिवबालक द्विवेदी, डा० प्रकाशमित्र शास्त्री | ५.०० |
| ६. | गीर्वाण्युपासकाः वैदेशिकाः | —डा० कान्तिकिशोर भरतिया | ४.०० |
| ७. | किरातार्जुनीयम् (प्रथमः सर्गः) | —डा० कृष्णकान्त त्रिपाठी | ४.८० |
| ८. | संस्कृतदिग्दर्शिका-प्रकाश | —डा० प्रकाशमित्र शास्त्री | २.५० |
| ९. | संस्कृतपरिचायिका-प्रबोध | —डा० प्रकाशमित्र शास्त्री, श्री हरिप्रसाद तिवारी | १.६० |
| १०. | यन्त्रसर्वस्व के वैमानिक प्रकरण का विवेचनात्मक अध्ययन (शोधप्रबन्ध) | —डा० ! | |

शिक्षक प्रकाशन, १०५/१९४, प्रेमनगर,